- **तत्पुरुषः ॥**
  - अधिकारोऽयं प्राग्बहुव्रीहेः॥
- **द्विगुश्च ॥**
  - द्विगुरपि तत्पुरुषसंज्ञकः स्यात्॥
- **द्वितीयाश्रितातीतपतितगतात्यस्तप्राप्तापन्नैः ॥**
  - द्वितीयान्तं श्रितादिप्रकृतिकैः सुबन्तैः सह वा समस्यते स च तत्पुरुषः।
    कृष्णं श्रितः कृष्णश्रित इत्यादि॥

| | |
|---|---|
| कृष्ण अम् श्रित सु | द्वितीयाश्रितातीतपतितगतात्यस्तप्राप्तापन्नैः |
| कृष्ण श्रित | सुपो धातुप्रातिपदिकयोः |
| कृष्णश्रित सु | स्वौजसमौट्छस्टाभ्या......... |
| कृष्णश्रितः | रुत्वविसर्ग |

❖ **तृतीया तत्कृतार्थेन गुणवचनेन॥**

✓ तृतीयान्तं तृतीयान्तार्थकृतगुणवचनेनार्थेन च सह वा प्राग्वत्। शङ्कुलया खण्डः शङ्कुलाखण्डः । धान्येनार्थो धान्यार्थः । तत्कृतेति किम् ? अक्ष्णा काणः॥

| | |
|---|---|
| शङ्कुला टा खण्ड सु | तृतीया तत्कृतार्थेन गुणवचनेन |
| शङ्कुला खण्ड | सुपो धातुप्रातिपदिकयोः |

❖ **कर्तृकरणे कृता बहुलम्॥**

✓ कर्तरि करणे च तृतीया कृदन्तेन बहुलं प्राग्वत्। हरिणा त्रातो हरित्रातः। नखैर्भिन्नः नखभिन्नः। (प.) कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम्। नखनिर्भिन्नः॥

❖ **चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः ॥**

✓ चतुर्थ्यन्तार्थाय यत् तद्वाचिना अर्थादिभिश्च चतुर्थ्यन्तं वा प्राग्वत्। यूपाय दारु यूपदारु। (*तदर्थेन प्रकृतिविकृतिभाव एवेष्टः*)। तेनेह न - रन्धनाय स्थाली।

| | |
|---|---|
| यूप ङे दारु सु | चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः |
| यूप दारु | सुपो धातुप्रातिपदिकयोः |
| यूपदारु सु | स्वौजसमौट्छस्टाभ्या......... |
| यूपदारु | स्वमोर्नपुंसकात् । |

❖ ***वार्तिक- अर्थेन नित्यसमासो विशेष्यलिङ्गता चेति वक्तव्यम्***

✓ द्विजार्थः सूपः। द्विजार्था यवागूः। द्विजार्थं पयः। भूतबलिः। गोहितम्। गोसुखम्। गोरक्षितम्॥

- **पञ्चमी भयेन ॥**
  - चोराद्भयं चोरभयम् ॥

| | |
|---|---|
| चोर ङसि भय सु | पञ्चमी भयेन |
| चोर भय | सुपो धातुप्रातिपदिकयोः |
| चोरभय सु | स्वौजसमौट्छस्टाभ्या......... |
| चोरभयम् | अतोऽम् , अमि पूर्वः |

- **स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन ॥**
- **पञ्चम्याः स्तोकादिभ्यः ॥**
  - अलुगुत्तरपदे । स्तोकान्मुक्तः। अन्तिकादागतः। अभ्याशादागतः। दूरादागतः । कृच्छ्रादागतः॥

❖ **षष्ठी॥**

✓ सुबन्तेन प्राग्वत्। राज्ञः पुरुषः राजपुरुषः॥

| | |
|---|---|
| राजन् ङस् पुरुष सु | षष्ठी |
| राजन् पुरुष | सुपो धातुप्रातिपदिकयोः |
| राजपुरुष | नलोपः प्रातिपदिकान्तस्य |

विभक्तिकार्य के पश्चात् **राजपुरुषः**

❖ **पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे॥**

✓ अवयविना सह पूर्वादयः समस्यन्ते एकत्वसंख्याविशिष्ट-श्चेदवयवी। षष्ठीसमासापवादः। पूर्वं कायस्य पूर्वकायः। अपरकायः। एकाधिकरणे किम्? पूर्वश्छात्राणाम्॥

❖ **अर्धं नपुंसकम् ॥**

✓ समांशवाच्यर्धशब्दो नित्यं क्लीबे, स प्राग्वत्। अर्धं पिप्पल्याः अर्धपिप्पली।

अर्ध सु पिप्पली ङस् — अर्धं नपुंसकम्

अर्धपिप्पली

❖ **सप्तमी शौण्डैः॥**

✓ सप्तम्यन्तं शौण्डादिभिः प्राग्वत्। अक्षेषु शौण्डः अक्षशौण्ड इत्यादि। द्वितीयातृतीयेत्यादियोगविभागादन्यत्रापि तृतीयादिविभक्तीनां प्रयोगवशात्समासो ज्ञेयः॥

अक्ष सुप् शौण्ड सु — सप्तमी शौण्डैः

अक्षशौण्ड

❖ **दिक्संख्ये संज्ञायाम् ॥**

✓ संज्ञायामेवेति नियमार्थं सूत्रम्। पूर्वेषुकामशमी। सप्तर्षयः। तेनेह न - उत्तरा वृक्षाः। पञ्च ब्राह्मणाः॥

पूर्वा सु इषुकामशमी सु — दिक्संख्ये संज्ञायाम्

पूर्वेषुकामशमी

❖ **तद्धितार्थोत्तरपदसमाहारे च ॥**

✓ तद्धितार्थे विषये उत्तरपदे च परतः समाहारे च वाच्ये दिक्संख्ये प्राग्वत्। पूर्वस्यां शालायां भवः - पूर्वा शाला इति समासे जाते *(सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः)*॥

पूर्वा ङि शाला ङि — तद्धितार्थोत्तरपदसमाहारे च

पूर्वा शाला — सुपो धातुप्रातिपदिकयोः

पूर्व शाला — सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः

- **दिक्पूर्वपदादसंज्ञायां ञः ॥**
  - अस्माद्भवाद्यर्थे ञः स्यादसंज्ञायाम्॥

पूर्व शाला ञ(अ) दिक्पूर्वपदादसंज्ञायां ञः

- **तद्धितेष्वचामादेः ॥**
  - ञिति णिति च तद्धितेष्वचामादेरचो वृद्धिः स्यात्। यस्येति च। पौर्वशालः। पञ्च गावो धनं यस्येति त्रिपदे बहुव्रीहौ। (*द्वन्द्वतत्पुरुषयोरुत्तरपदे नित्य समासवचनम्*)॥

पौर्व शाला अ तद्धितेष्वचामादेः

पौर्व शाल् अ यस्येति च

पौर्वशाल सु स्वौजसमौट्छस्टा......

पौर्वशालः

❖ **गोरतद्धितलुकि ॥**

✓ गोऽन्तात्तत्पुरुषाट्टच् स्यात् समासान्तो न तु तद्धितलुकि। पञ्चगवधनः॥

पञ्चन् जस् गो जस् धन सु — तद्धितार्थोत्तरपदसमाहारे च

पञ्चन् गो धन — सुपो धातुप्रातिपदिकयोः

पञ्च गो टच्(अ) धन — नलोपः प्रातिपदिकान्तस्य,गोरतद्धितलुकि

पञ्च ग् अवङ्(अव्) अ धन — अवङ् स्फोटायनस्य, यस्येति च।

पञ्चगवधन

❖ **तत्पुरुषः समानाधिकरणः कर्मधारयः ॥**

❖ **संख्यापूर्वो द्विगुः ॥**

✓ तद्धितार्थेत्यत्रोक्तस्त्रिविधः संख्यापूर्वो द्विगुसंज्ञः स्यात्।

❖ **द्विगुरेकवचनम् ॥**

✓ द्विग्वर्थः समाहार एकवत्स्यात् ॥

❖ **स नपुंसकम् ॥**

✓ समाहारे द्विगुर्द्वन्द्वश्च नपुंसकं स्यात्। पञ्चानां गवां समाहारः पञ्चगवम् ।

| | |
|---|---|
| पञ्चन् आम् गो आम् | तद्धितार्थोत्तरपदसमाहारे च |
| पञ्चन् गो | सुपो धातुप्रातिपदिकयोः |
| पञ्च गो टच्(अ) | नलोपः प्रातिपदिकान्तस्य,गोरतद्धितलुकि |
| पञ्च ग् अवङ्(अव्)अ | अवङ् स्फोटायनस्य, यस्येति च |
| पञ्चगव सु | स्वौजसमौट्छस्टा.... |
| पञ्चगव अम् | अतोऽम् |
| पञ्चगवम् | अमि पूर्वः |

❖ **विशेषणं विशेष्येण बहुलम्॥**

✓ भेदकं भेद्येन समानाधिकरणेन बहुलं प्राग्वत्। नीलमुत्पलं नीलोत्पलम्। बहुलग्रहणात्क्वचिन्नित्यम् - कृष्णसर्पः। क्वचिन्न - रामो जामदग्न्यः॥

| | |
|---|---|
| नील सु उत्पल सु | विशेषणं विशेष्येण बहुलम् |
| नील उत्पल | सुपो धातुप्रातिपदिकयोः |
| नीलोत्पल सु | स्वौजसमौट्छस्चटा..... |
| नीलोत्पलम् | अतोऽम्, अमि पूर्वः |

❖ **उपमानानि सामान्यवचनैः ॥**

✓ घन इव श्यामो घनश्यामः। (*शाकपार्थिवादीनां सिद्धये उत्तरपदलोपस्योपसंख्यानम्*)। शाकप्रियः पार्थिवः शाकपार्थिवः। देवपूजको ब्राह्मणो देवब्राह्मणः ॥

❖ **नञ् ॥**

✓ नञ् सुपा सह समस्यते॥

❖ **नलोपो नञः ॥**

✓ नञो नस्य लोप उत्तरपदे । न ब्राह्मणः अब्राह्मणः॥

| | |
|---|---|
| नञ्(न) ब्राह्मण सु | नञ् |
| न ब्राह्मण | सुपो धातुप्रातिपदिकयोः |
| अ ब्राह्मण | नलोपो नञः |
| अब्राह्मण सु(स्) | स्वौजसमौट्छस्चटा..... |
| अब्राह्मण रु(र्) | ससजुषो रुः |
| अब्राह्मणः | खरवसानयोर्विसर्जनीयः |

## ❖ तस्मान्नुडचि ॥

✓ लुप्तनकारान्नञ उत्तरपदस्याजादेर्नुडागमः स्यात्। अनश्वः। नैकधेत्यादौ तु नशब्देन सह सुप्सुपेति समासः॥

| | |
|---|---|
| नञ्(न) अश्व सु | नञ् |
| न अश्व | सुपो धातुप्रातिपदिकयोः |
| अ अश्व | नलोपो नञः |
| अ नुट्(न्) अश्व | तस्मान्नुडचि |
| अनश्व सु | स्वौजसमौट्छस्चटा..... |
| अनश्वः | रुत्व विसर्ग। |

- **कुगतिप्रादयः ॥**
  - ✓ एते समर्थेन नित्यं समस्यन्ते। कुत्सितः पुरुषः कुपुरुषः॥
- **ऊर्यादिच्विडाचश्च ॥**
  - ✓ ऊर्यादयश्च्व्यन्ता डाजन्ताश्च क्रियायोगे गतिसंज्ञाः स्युः। ऊरीकृत्य। शुक्लीकृत्य। पटपटाकृत्य। सुपुरुषः॥

| | |
|---|---|
| 1. ऊरी कृत्वा | कुगतिप्रादयः |
| ऊरीकृत्य | समासेऽनञ्पूर्वे क्त्वो ल्यप् |
| 2. शुक्ल च्वि कृत्वा | अभूततद्भावे कृभ्वस्तियोगे सम्पद्यकर्तरि च्विः |
| शुक्ल कृत्वा | चुटू, वेरपृक्तस्य |
| शुक्ली कृत्वा | अस्य च्वौ, कुगतिप्रादयः |
| शुक्लीकृत्य | समासेऽनञ्पूर्वे क्त्वो ल्यप् |

| | |
|---|---|
| 3. पटत् डाच्(आ)कृत्वा | अव्यक्तानुकरणाद्व्यजवरार्धादनितौ डाच् |
| पटत् पटत् आ कृत्वा | डाचि विवक्षिते द्वे बहुलम् |
| पटपटत् आ कृत्वा | नित्यमाम्रेडिते डाचीति वक्तव्यम् (पररूप) |
| पटपट् आ कृत्वा | टेः |
| पटपटा कृत्वा | कुगतिप्रादयः |
| पटपटाकृत्य | समासेऽनञ्पूर्वे क्त्वो ल्यप् |
| 4. सु पुरुष सु | कुगतिप्रादयः |
| सु पुरुष | सुपो धातुप्रातिपदिकयोः |
| सुपुरुष सु | स्वौजसमौट्छस्टा.... |
| सुपुरुषः | रुत्व विसर्ग |

❖ *(प्रादयो गताद्यर्थे प्रथमया)*। प्रगत आचार्यः प्राचार्यः। *(अत्यादयः क्रान्ताद्यर्थे द्वितीयया)*। अतिक्रान्तो मालामिति विग्रहे –

| | |
|---|---|
| 1. प्र आचार्य सु | *प्रादयो गताद्यर्थे प्रथमया* |
| प्राचार्य | सुपो धातुप्रातिपदिकयोः |
| प्राचार्य सु | स्वौजसमौट्छस्टा.... |
| प्राचार्यः | रुत्वविसर्ग |
| 2. अति माला अम् | *अत्यादयः क्रान्ताद्यर्थे द्वितीयया* |
| अति माला | सुपो धातुप्रातिपदिकयोः |

❖ **एकविभक्ति चापूर्वनिपाते ॥**

✓ विग्रहे यन्नियतविभक्तिकं तदुपसर्जनसंज्ञं स्यान्न तु तस्य पूर्वनिपातः॥

❖ **गोस्त्रियोरुपसर्जनस्य ॥**

✓ उपसर्जनं यो गोशब्दः स्त्रीप्रत्ययान्तं च तदन्तस्य प्रातिपदिकस्य ह्रस्वः स्यात्। अतिमालः। (*अवादयः क्रुष्टाद्यर्थे तृतीयया*)। अवक्रुष्टः कोकिलया - अवकोकिलः। (*पर्यादयो ग्लानाद्यर्थे चतुर्थ्या*)। परिग्लानोऽध्ययनाय पर्यध्ययनः। (*निरादयः क्रान्ताद्यर्थे पञ्चम्या*)। निष्क्रान्तः कौशाम्ब्याः - निष्कौशाम्बिः॥

❖ **तत्रोपपदं सप्तमीस्थम् ॥**

✓ सप्तम्यन्ते पदे कर्मणीत्यादौ वाच्यत्वेन स्थितं यत्कुम्भादि तद्वाचकं पदमुपपदसंज्ञं स्यात्॥

❖ **उपपदमतिङ् ॥**

✓ उपपदं सुबन्तं समर्थेन नित्यं समस्यते। अतिङन्तश्चायं समासः। कुम्भम् करोति कुम्भकारः। अतिङ् किम् ? मा भवान् भूत्। माङि लुङिति सप्तमीनिर्देशान्माङुपपदम्। (प.) गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः। व्याघ्री। अश्वक्रीती। कच्छपीत्यादि॥

❖ **तत्पुरुषस्याङ्गुलेः संख्याव्ययादेः॥**

✓ संख्याव्ययादेरङ्गुल्यन्तस्य समासान्तोऽच् स्यात्। द्वे अङ्गुली प्रमाणमस्य द्व्यङ्गुलम्। निर्गतमङ्गुल्यो निरङ्गुलम्॥

| | |
|---|---|
| द्वि औ अङ्गुलि औ | तद्धितार्थोत्तरपदसमाहारे च |
| द्वि अङ्गुलि | सुपो धातुप्रातिपदिकयोः |
| द्व्यङ्गुलि अच् (अ) | तत्पुरुषस्याङ्गुलेः संख्याव्ययादेः |
| द्व्यङ्गुल् अ | यस्येति च |

द्व्यङ्गुल सु(अम्) – द्व्यङ्गुलम्

❖ **अहःसर्वैकदेशसंख्यातपुण्याच्च रात्रेः ॥**

✓ एभ्यो रात्रेरच् स्याच्चात्संख्याव्ययादेः। अहर्ग्रहणं द्वन्द्वार्थम्॥

❖ **रात्राह्नाहाः पुंसि ॥**

✓ एतदन्तौ द्वन्द्वतत्पुरुषौ पुंस्येव। अहश्च रात्रिश्चाहोरात्रः। सर्वरात्रः। संख्यातरात्रः। (*संख्यापूर्वं रात्रं क्लीबम्*)। द्विरात्रम्। त्रिरात्रम्॥

❖ **राजाहः सखिभ्यष्टच्॥**

✓ एतदन्तात्तत्पुरुषाट्टच् स्यात्। परमराजः॥

| | |
|---|---|
| परम सु राजन् सु | विशेषणं विशेषेण बहुलम्। |
| परम राजन् | सुपो धातुप्रातिपदिकयोः |
| परम राजन् टच्(अ) | राजाहः सखिभ्यष्टच् |
| परम राज् अ | नस्तद्धिते |
| परमराज सु – परमराजः | |

❖ **आन्महतः समानाधिकरणजातीययोः॥**

✓ महत आकारोऽन्तादेशः स्यात्समानाधिकरणे उत्तरपदे जातीये च परे। महाराजः। प्रकारवचने जातीयर्। महाप्रकारो महाजातीयः॥

❖ **द्व्यष्टनः संख्यायामबहुव्रीह्यशीत्योः॥**

✓ आत्स्यात्। द्वौ च दश च द्वादश। अष्टाविंशतिः॥

❖ **त्रेस्त्रयः ॥**

✓ त्रयोदश। त्रयोविंशतिः। त्रयस्त्रिंशत् ॥

त्रि जस् दशन् जस् > त्रि दश>त्रयस् दश>त्रयोदश

❖ **परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः ॥**

✓ एतयोः परपदस्येव लिङ्गं स्यात्। कुक्कुटमयूर्याविमे। मयूरीकुक्कुटाविमौ। (*द्विगुप्राप्तापन्नालम्पूर्वगतिसमासेषु प्रतिषेधो वाच्यः*)। पञ्चसु कपालेषु संस्कृतः पञ्चकपालः पुरोडाशः॥

❖ **प्राप्तापन्ने च द्वितीयया ॥**

✓ समस्येते। अकारश्चानयोरन्तादेशः। प्राप्तो जीविकां प्राप्तजीविकः। आपन्नजीविकः। अलं कुमार्यै - अलंकुमारिः। अत एव ज्ञापकात्समासः। निष्कौशाम्बिः॥

❖ **अर्धर्चाः पुंसि च ॥**

✓ अर्धर्चादयः शब्दाः पुंसि क्लीबे च स्युः। अर्धर्चः। अर्धर्चम्। एवं ध्वजतीर्थशरीरमण्डपयूपदेहाङ्कुशपात्रसूत्रादयः। सामान्ये नपुंसकम्। मृदु पचति। प्रातः कमनीयम्॥

